जडाद्विलक्षणो बोधो
  यतो न परिमीयते ॥ ८ ॥
एवमस्य स्वतन्त्रस्य
  निजशक्त्युपभेदिनः ।
स्वात्मगाः सृष्टिसंहाराः
  स्वरूपत्वेन संस्थिताः ॥ ९ ॥
तेषु वैचित्र्यमत्यन्त-
  मूर्ध्वाधस्तिर्यगेव यत् ।
भुवनानि तदंशाश्च
  सुखदुःखमतिर्भवः ॥ १० ॥
यदेतस्यापरिज्ञानं
  तत्स्वातन्त्र्यं हि वर्णितम् ।
स एव खलु संसारो
  जडानां यो विभीषकः ॥ ११ ॥
तत्प्रसादरसादेव
  गुर्वागमत एव वा ।
शास्त्राद्वा परमेशस्य
  यस्मात्कस्मादुपागतम् ॥ १२ ॥

यत्तत्त्वस्य परिज्ञानं
स मोक्षः परमेशता ।
तत्पूर्णत्वं प्रबुद्धानां
जीवन्मुक्तिश्च सा स्मृता ॥ १३ ॥

एतौ बन्धविमोक्षौ च
परमेशस्वरूपतः ।
न भिद्येते न भेदो हि
तत्त्वतः परमेश्वरे ॥ १४ ॥

इत्थमिच्छाकलाज्ञान-
शक्तिशूलाम्बुजाश्रितः ।
भैरवः सर्वभावानां
स्वभावः परिशील्यते ॥ १५ ॥

सुकुमारमतीञ्छिष्या-
न्प्रबोधयितुमञ्जसा ।
इमेऽभिनवगुप्तेन
श्लोकाः पञ्चदशोदिताः ॥ १६ ॥

---

समाप्ता चेयं बोधपञ्चदशिका ।

---

कृतिर्महामाहेश्वराचार्यवर्य-श्रीमदभिनवगुप्तपादानाम् ।

प्रकाशिता च काश्मीरमहाराजाश्रितपण्डित-मुकुन्दराम-शास्त्रिणेयम् ।

मुंबई—" तत्त्वविवेचक " प्रेस.

ओं नमोऽनुत्तरप्रकाशशंकराय ।

अथ

# अनुत्तरप्रकाशपञ्चाशिका ।

श्रीआद्यनाथविरचिता ।

अकृत्रिमाहमामर्शप्रकाशैकघनः शिवः ।
शक्त्या विमर्शवपुषा स्वात्मनोऽनन्यरूपया ॥ १ ॥
शिवादिक्षितिपर्यन्तं विश्वं वपुरुदञ्चयन् ।
पञ्चकृत्यमहानाट्यरसिकः क्रीडति प्रभुः ॥ २ ॥
पृथगर्थमर्थवत्ता विश्वविश्वशरीरयोः ।
न विश्वविश्ववपुषोर्भिन्नता कापि तात्त्विकी ॥३॥
भेदे सत्तास्फुरत्ताभ्यां भिन्नं किं तु जगद्भवेत् ।
सत्तास्फुरत्तासंबन्धात्सत्ता भानं च तन्न चेत् ॥४॥
असतः किं सतस्ताभ्यां संबन्धः सोऽयमिष्यते ।
स्वरूपलाभसुलभः संबन्धो नह्यवस्तुनः ॥ ५ ॥
न लब्धरूपसंबन्धे ताभ्यां किंचिदपेक्ष्यते ।

अपेक्षायामवस्थानं न स्यादेतस्य किंचन ॥ ६ ॥
स्वभावतः स्फुरत्ता च सत्ता च न विनाशिनी ।
विनाशानभ्युपगमे जडतापि निवर्तते ॥ ७ ॥
ततो गत्यन्तराभावाच्चिदेव परिशिष्यते ।
सतश्चिदैक्यं प्रकृतं कदाचिन्न निवर्तते ॥ ८ ॥
प्रकाशोऽनन्यतो भावः स्वातन्त्र्योल्लासकेवलः ।
परिच्छिन्नात्मिका शक्तिः शम्भोर्विश्वातिशायिनः ॥ ९ ॥
यत्प्रकाशात्मकं सर्वं तमःकेवलतां गतम् ।
यच्च किंचिज्जगदेतत्प्रकाशादतिरिच्यते ॥ १० ॥
विमृश्यसरणीं प्राप्तमित्येषा तात्त्विकी मतिः ।
अवभासैकतानानां मतिरेकात्र साक्षिणी ॥ ११ ॥
किं प्रमाणैर्वराकैस्तैश्चिदनुप्राणितात्मभिः ।
नहि वैकर्तनं ज्योतिर्दीपालोकमपेक्षते ॥ १२ ॥
शक्तिपातपवित्रेऽस्मिन्धीतत्त्वे च परीक्ष्यताम् ।
आदर्शविमलाभोगे न तु सर्वं प्रकाशते ॥ १३ ॥

इत्थं चिदात्मकं सर्वं षट्त्रिंशद्भेदतत्त्वतः ।
आदौ शुद्धात्मकं तत्त्वं पञ्चधा तमसः परम्
॥ १४ ॥

शिवः शक्तिश्च सादाख्यमीशो विद्येति भिद्यते ।
अक्षादिशान्तवर्णात्मा निरमायि शिवेन तु
॥ १५ ॥

कलाविद्यारागकालनियतिर्बन्ध उच्यते ।
मायापूर्वो वकारादिक्षकारान्ताक्षरात्मकः ॥१६॥
पुमाञ्शक्तिर्मनो बुद्धिरहंकारादिपञ्चकम् ।
श्रोत्रादिपञ्चकं तादि टादि वागादिपञ्चकम्
॥ १७ ॥

तन्मात्रपञ्चकं चादि कादि व्योमादिपञ्चकम् ।
सिसृक्षोः प्रथमस्पन्दः शिवतत्त्वं विभोः स्मृतम्
॥ १८ ॥

इच्छैव सापरिम्लाना शक्तितत्त्वमुदञ्चयन् ।
स्वेच्छया सूचितं विश्वमाच्छाद्याहन्तया स्थि-
तम् ॥ १९ ॥

---

१ इत्थमित्यादि पद्यपञ्चकं ग्रन्थान्तरैर्विसंवाद्यर्थकमादर्शान्तरानुपलब्ध्या यथावदुपन्यस्तम् ।

स एव तत्त्वं सादाख्यं सर्वानुग्रहणोद्यतम् ।
स एवेश्वरतत्त्वं स्यात्पश्यन्विश्वमिदन्तया ॥२०॥
इदन्ताहन्तयोरैक्यमिति विद्या निगद्यते ।
स्वाङ्गकल्पेषु भावेषु मायातत्त्वं विभेदधीः॥२१॥
मायागृहीतसंकोचः शिवः पुंतत्त्वमुच्यते ।
अयमेव हि संसारी जीवो भोक्तैव दृश्यते ॥ २२॥
ज्ञत्व-कर्तृत्व-पूर्णत्व-नित्यत्वान्यस्य शक्तयः ।
तत्संकोचात्संकुचितः कलाद्यात्मतया मतः॥२३॥
मायात्मकं कला नाम किंचित्कर्तृत्वकारणम् ।
विद्या किंचिज्ज्ञताहेतू रागोऽभिष्वङ्गकारणम् २४
कालः परिच्छेदकरो नियतिश्चेदमेव मे ।
कर्तव्यं नान्यदित्येषा व्यवस्था यन्त्रणाकृतिः २५
प्रकृतिर्गुणसाम्यं स्यादहंकारादिजन्मभूः ।
अहं ममेदमित्येतद्बुद्धिहेतुरहंकृतिः ॥ २६ ॥
बुद्धिरध्यवसायस्य कारणं निश्चयात्मनः ।
संकल्पस्य विकल्पस्य बीजं मन उदीर्यते ॥ २७॥
वचनादेश्च शब्दादेर्वागादि-श्रवणादिकम् ।

कारणं श्रवणादीनां ग्राह्यं तन्मात्रपञ्चकम् ॥२८॥
आकाशाद्यवकाशादिकारणं भूतपञ्चकम् ।
परापराशक्तिमये शुद्धे विद्यादिपञ्चकम् ॥ २९ ॥
तदन्यदपराशक्तिरित्येतत्तत्त्वमीरितम् ।
इयं देवी परा शक्तिः शुद्धाशुद्धाध्वगर्भिणी ॥३०॥
पृथिव्यादीनि तत्त्वानि यदा लीनानि कारणे ।
तदा कारणमात्राणि बहिरुद्भमते विभुः ॥ ३१ ॥
अनुत्तरेच्छे[1] उन्मेष आनन्देशनमूनता ।
क्रियेच्छाज्ञानशक्तीनां सत्ता षट्.... ॥ ३२ ॥
इच्छेशनान्तरारूढा स्फुटास्फुटजगन्मयी ।
चत्वारः परतो वर्णाः षण्डात्मानः प्रचोदिताः ॥ ३३ ॥
अनुत्तरानन्दरूढा स्फुटास्फुटजगन्मयाः ।
चत्वारः परतो वर्णाः षण्डात्मानः प्रचोदिताः ॥ ३४ ॥
अनुत्तरानन्दशक्तिस्त्रिकोणाद्वृत्तियोगतः ।

---

१ अनुत्तरेत्यादित्रिपद्येष्वर्थासंगत्या पाठाशुद्धिः प्रतिभाति ।

तथैवोन्मेषयोगेन क्रियाशक्तेः स्फुटं वपुः ॥ ३५ ॥
उक्तं त्रिशक्तिसंघट्टात्त्रिशूलं द्वैतघस्मरम् ।
परस्परविरोधे तु कार्येषु प्रविरोहति ॥ ३६ ॥
न कथंचिदुपादेयमासां रूपमिदं भवेत् ।
बिन्दुर्वेद्यस्य संस्कारो विमर्शः सर्ग इत्यसौ ॥३७॥
कलाषोडशकाकारा शक्तिर्विजयते परा ।
तिथयः प्रतिपत्पूर्वाः पञ्चदशेति मायया ॥ ३८ ॥
सूर्याचन्द्रमसौ स्वान्तश्चरन्तौ स्थितिहेतवे ।
यथा विमर्शवपुषः सर्गस्याद्याः कलाः स्मृताः ॥ ३९ ॥
द्विधेयं मातृका देवी बीजयोन्यात्मना स्थिता ।
नित्यप्रवृत्तशृङ्गाटवपुर्विश्वस्य जन्मभूः ॥ ४० ॥
हृदयं बीजमेतस्यां सारं यत्तत्परं महः ।
वटबीजे यथा वृक्षस्तथात्र निहितं जगत् ॥ ४१ ॥
विचार्यमाणे नैवेदं कारणादतिरिच्यते ।
मृदादेः कलशादीनां तत्त्वं नान्यन्निरूपणे ॥४२॥
इत्याहुस्तत्त्ववादिन्यः श्रुतीनामन्तिमा गिरः ।

इदं सर्वं सदेवासीदग्रे इति विनिश्चयात् ॥४३॥
सत्तावाचिनि बीजेऽस्मिन्भाति माया त्विदं जगत्
विलुप्तप्रत्ययाकारमेतत्स परिशिष्यते ॥ ४४ ॥
ततो ज्ञानक्रियासारविद्येश्वरसदाशिवाः ।
शक्तित्रिशूले लीयन्ते चतुर्दशकलात्मनि ॥४५॥
ऊर्ध्वाधः सृष्टिवपुषि सर्वं लीनमतः [ परम् ] ।
इत्थं परस्यां संवित्तौ सर्वं संकुचितं क्रमात् ॥४६॥
अथ वा मनसातीते यत्र क्वापि निरञ्जने ।
षट्त्रिंशत्तत्त्वलहरीकलहातीतगोचरे ॥ ४७ ॥
विश्वात्मनि महामन्त्रे स्वभावे सा विलीयते ।
कुतश्चिन्मथिते धाम्नि दीप्ते केनापि हेतुना ॥४८॥
सर्वं हविरिदं जुह्वन्न दारिद्र्येण पीड्यते ।
पञ्चपञ्चात्मकं विश्वं पञ्चस्पन्दविजृम्भितम्॥४९॥
संकोचयत्परामर्शात्सामान्यस्पन्दकेवलम् ।
अहमि प्रलयं कुर्वन्निदमः प्रतियोगिनः ॥५०॥
पराक्रमपरो भुङ्क्ते स्वभावमशिवापहम् ॥ ५१ ॥

इति षडधिकत्रिंशद्भेदप्रसक्तजगत्तनुः
प्रसरति महाशक्त्युल्लेखविचित्रमहापटी ।
जयति बहुशः स्पन्दाकारा परा चिदनुत्तरा
विमृशत जनाः किं नो भूयः स्वभावविजृ-
म्भितम् ॥

---

इति श्रीमदाद्यनाथविरचिता अनुत्तरप्रकाशपञ्चाशिका समाप्ता ॥

---

सेयं काश्मीरभूपालसंश्रितेन प्रकाशिता ।
सता मुकुन्दरामेण सन्मुदेऽस्तु शिवेऽर्पिता ॥

---

मुंबई—" तत्त्वविवेचक " प्रेस.

KASHMIR SERIES OF TEXTS AND STUDIES.

No. XV.

# THE PARĀ PRĀVESHIKĀ

OF

KṢHĒMARĀJA.

EDITED WITH NOTES

BY

MAHĀMAHOPĀDHYĀYA PAṆḌIT MUKUNDA RĀMA SHÂSTRÎ,
OFFICER-IN-CHARGE RESEARCH DEPARTMENT,
JAMMU AND KASHMIR STATE,
SRINAGAR.

---

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT
OF HIS HIGHNESS LIEUT.-GENERAL MAHĀRĀJA
SIR PRATĀP SINGH SĀHIB BAHĀDUR,
G. C. S. I., G. C. I. E.,
MAHĀRĀJA OF JAMMU AND KASHMIR STATE.




BOMBAY:
PRINTED AT THE "TATVA-VIVECHAKA" PRESS.
1918.

---

श्रीमच्छ्रीकण्ठनाथप्रभृतिगुरुवरादिष्टसन्नीतिमार्गो
लब्ध्वा यत्रैव सम्यक्पटिमनि घटनामीश्वराद्वैतवादः ।
कश्मीरेभ्यः प्रसृत्य प्रकटपरिमलो रञ्जयन्सर्वदेश्यान्
देशोऽप्यस्मिन्नदृष्टो घुसृणविसरवत्स्तान्मुदे सज्जनानाम् ॥ १ ॥

तरत तरसा संसाराब्धिं विधत्त परे पदे
पदमविचलं नित्यालोकप्रमोदसुनिर्भरे ।
विमृशत शिवादिष्टाद्वैतावबोधसुधारसं
प्रसभविलसत्सद्युक्त्यान्तःसमुत्प्लवदायिनम् ॥ २ ॥

ॐ

काश्मीर-संस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः १९

# पराप्रावेशिका

श्रीमन्महामाहेश्वराचार्यवर्य-श्रीक्षेमराजाचार्यविरचिता

श्रीभारतधर्ममार्तण्ड-कश्मीरमहाराज-

श्रीप्रतापसिंहवर-प्रतिष्ठापिते

प्रत्नविद्याप्रकाश-(रिसर्च) कार्यालये

तदध्यक्ष-महामहोपाध्याय-पण्डित-मुकुन्दराम-शास्त्रिणा

उद्दिष्टकार्यालयस्थेतरपण्डितसहायेन

संगृह्य, संशोधन-पर्यायाङ्कन-विवरणादिसंस्करणोत्तरं

पाश्चात्यविद्वत्परिषत्संमताधुनिकसुगमशुद्धरीत्युपन्यासादिसंस्कारैः परिष्कृत्य

मुम्बय्यां

तत्त्वविवेचकाख्य-मुद्रणालये मुद्रापयित्वा प्राकाश्यमुपनीता




संवत् १९७५ ख्रैस्ताब्दः १९१८

काश्मीर-श्रीनगर

ओं नमः शिवाय निखिलतत्त्वात्मने

अथ

# पराप्रावेशिका

श्रीमन्महामाहेश्वराचार्यवर्यक्षेमराजविरचिता ।

विश्वात्मिकां तदुत्तीर्णां
हृदयं परमेशितुः ।
परादिशक्तिरूपेण
स्फुरन्तीं संविदं नुमः ॥

इह खलु परमेश्वरः प्रकाशात्मा, प्रकाशश्च विमर्शस्वभावः, विमर्शो नाम विश्वाकारेण विश्वप्रकाशेन विश्वसंहरणेन च

(१) ननु परमेश्वरः प्रकाशस्वभावत्वेऽपि किं शान्तब्रह्मवादिनामिव केवलबोधस्वभावः स्यादित्याशङ्क्याह प्रकाशश्चेति ।

(२) विमर्शो हि परिमितापरिमितत्वाभ्यां द्विधा, तत्र परिमितत्वे शून्यादिप्रमातृुचितेन तेन संवित्प्रकाशस्य परिच्छिन्नत्वं मा भूदित्याश-

अकृत्रिमाहम् इति विस्फुरणम् । यदि[3] निर्विमर्शः स्यात् अनीश्वरो जडश्च प्रसज्येत । एष एव च विमर्शः – चित्, चैतन्यं, स्वरसोदितापरावाक्, स्वातन्त्र्यं, परमात्मनो मुख्यमैश्वर्यं, कर्तृत्वं, स्फुरत्ता, सारो, हृदयं, स्पन्दः इत्यादिशब्दैरागमेषूद्घोष्यते[4],

---

येनाह विमर्शो नामेति, स च विमर्शो विश्वाकारेण सृष्टौ, तत्प्रकाशेन स्थितौ, स्वात्मसात्कारात्मना संहरणेन संहारे च पूर्णाहन्ताचमत्कारात्मक इति यावत् ।

(३) यदीति । विमर्शविकलः सूर्यादिप्रकाशो यथा परापेक्षत्वात् जडपक्षपाती अस्वातन्त्र्यमाश्रितवान् तथैव निर्विमर्शतया संवित्प्रकाशोऽपि प्रसक्तिरापतेदिति भावः ।

(४) इह शैवशासननये संवित्प्रकाशस्य विमर्शप्राधान्यमेव तत्तदागमेषु समुद्घुष्टं, स एव भिन्नभिन्नाभिरागमभाषाभिराम्नायते, यथा – चैतन्यमिति विमर्श एव मुख्यमात्मनो रूपमित्यभिप्रेत्य धर्मवाचिना शब्देन निर्देशः कृतः । तथा स्वरसोदितापरावाक् इति – वक्ति विश्वमभिलपति प्रत्यवमर्शेनेति वाक्, सैव परामर्शान्तराणामाधारभूतत्वात् पूर्णत्वाच्च परा, अत एव अनिरुद्धप्रसरत्वात् अहमिति परिपूर्णचिद्वपुषा सदोदितत्वात् स्वरसोदितेति । तथा स्वातन्त्र्यमिति, स्वातन्त्र्यं च संयोजनवियोजनादिरूपं स्वस्मात् बहिष्कृतमिदन्तापदं स्वात्मनि संयोजयति, संयोज्यापि वियोजयति, शून्यादिभूमिकायां च न्यग्भावयति, – इत्यादिलक्षणत्वेन जडाद्वैलक्षण्याधायीति । तथा ऐश्वर्यमिति विश्वसर्गादावनन्यापेक्षित्वं न तु अस्य मायागर्भाधिकारिणो ब्रह्मादेरिव परेच्छावशवर्तित्वेन नियतिनियन्त्रणावत्त्वम् इति । तथा कर्तृत्वमिति, एतदेव कर्तृत्वं यत् अलौकिकेन

अत एव अकृत्रिमाहमिति-सतत्त्वः स्वयंप्रकाशरूपः परमेश्वरः पारमेश्वर्या शक्त्या शिवादि-धरण्यन्तजगदात्मना स्फुरति प्रकाशते च। एतदेव अस्य जगतः कर्तृत्वमजडत्वं च, जगतः कार्यत्वमपि एतदधीनप्रकाशत्वमेव, एवंभूतं जगत्

---

कार्यकारणभावेन स्वान्तःप्रकाशैक्येन स्थितस्य शिवादेः पृथिव्यन्तस्य विश्वस्य इदन्तया समुन्मीलनं योगिनिर्माणवत् इति। तथा स्फुरत्तेति स्फुरणसंबन्धः, तद्घटादेर्नास्ति, तथात्वे हि सर्वेषां सदैव घटादिकं प्रस्फुरेत् न कस्यचिद्वेति सर्वसर्वज्ञता तद्विपर्ययो वा प्रसज्येत, अतो मम स्फुरतीति मदीयं स्फुरणमाविष्ट इत्यर्थः। सारमिति अतुच्छं रूपं, सा परमेश्वरस्य विमर्शशक्तिरेवेति। हृदयमिति विश्वप्रतिष्ठास्थानत्वात्। स्पन्द इति अचलस्य चित्प्रकाशस्य चलत्ताभासनं, यत् तत्र अनतिरिक्तत्वेपि अतिरिक्ततयेव विश्वावभासनमित्यर्थः।

(५) विमर्शशक्तिमाहात्म्यादेव परमेश्वरो विश्ववैचित्र्यप्रथात्मना स्वात्मनैव समुल्लसतीति प्रतिपादयन् विमर्शशक्तिलक्षणमुपसंहरति अत एवेति। मायाप्रकृत्यादेर्जगत्सृष्टौ कारणान्तरस्य भेदाभेदविकल्पैरुपहतत्वात् न तत्कर्तृत्वमुपपद्यते इति भावः।

(६) यद्विश्वात्मना परमेश्वरस्य प्रस्फुरणम् इदमेव पारमार्थिकं कर्तृत्वं, तत्स्फुरणात्मनैव प्रकाश्यमानस्य विश्वस्याजडभावोऽपि स्यादित्याह एतदेवेति।

(७) ननु जगद्विषयं कीदृक् कार्यत्वं भेदेनाभेदेन वा, भिन्नत्वे त-

---

पं० २० ख० पु० भिन्नत्वे हि इति पाठः।

प्रकाशरूपात् कर्तुर्महेश्वरादभिन्नमेव, भिन्नवेद्यत्वेऽप्रकाशमानत्वेन प्रकाशनायोगात् न किंचित्स्यात्, अनेनं च जगता अस्य भगवतः प्रकाशात्मकं रूपं न कदाचित् तिरोधीयते, एतत्प्रकाशनेन प्रतिष्ठां लब्ध्वा प्रकाशमानमिदं जगत् आत्मनः प्राणभूतं कथं निरोद्धुं शक्नुयात्, कथं च तन्निरुध्य स्वयमवतिष्ठेत, अतश्चास्य वस्तुनः साधकमिदं बाधकमिदं प्रमाणमित्यनुसंधानात्मकसाधकबाधकप्रमातृरूपतया चास्य सद्भावः, तत्सद्भावे किं प्रमाणम्? – इति वस्तुसद्भावमनुमन्यतां, तादृक्स्वभावे किं प्रमाणम्? – इति प्रष्टृरूपतया च पूर्वसिद्धस्य

---

त्कर्तुः परमेश्वरस्य स्वातन्त्र्यं नाम विघटेत, अभिन्नत्वे कथं तत् इत्याशङ्क्याह जगत इति। अस्य जगतः परप्रकाशं विना अचेत्यमानत्वात् स्वात्मलाभो दुर्घटः, तदाश्रयत्वावलम्बनात् तत् प्रकाशशरीरतामेतीत्येतदेव कार्यत्वं, केवलं मायास्वातन्त्र्येण भेदोद्भासनादभिन्नत्वेऽपि भिन्नव्यवहार इति भावः।

(८) अभेदत्वे विश्वं भातुं प्रगल्भेत, अन्यथा स्वरूपशून्यत्वात् विश्वव्यवहारो हानादानादिरूपो विनश्येदित्याशयेनाह भिन्नवेद्यत्वे इति।

(९) ननु यदि जगत् परमेश्वरादभिन्नं तत् प्रकाशैकरूपस्य जगतो भासमानत्वात् परमेश्वरे सारूप्यभेदो दुर्वारः, तेनापि तस्य तिरोधीयमानत्वं भवेदिति शङ्कां निवारयन्नाह अनेनेति। प्रत्युत स्वात्मनि लब्धेऽपि प्रकाशावरणात् स्वयमेव नष्टं भवेदित्यर्थः।

(१०) ज्ञापकादिकारकाणि पूर्वसिद्धे ईश्वरे व्यापरीतुं न शक्नुवन्ती-

महेश्वरस्य स्वयंप्रकाशत्वं सर्वस्य स्वसंवेदनसिद्धम् । किं च[11] प्रमाणमपि यमाश्रित्य प्रमाणं भवति तस्य प्रमाणस्य तद्-धीनशरीरप्राणनीलसुखादिवेद्यं चातिशय्य सदा भासमानस्य वेदकैकरूपस्य सर्वप्रमितिभाजः सिद्धौ अभिनवार्थप्रकाशस्य प्रमाणवराकस्य कश्चोपयोगः[12] । एवं च शब्दराशि[13]मयपूर्णाह-

---

स्याशयं गृहीत्वा तद्विध्यादिकर्तुः प्रमातुरपि ताद्रूप्येण सत्त्वात् न तत्सिद्धिः प्रमाणाधीना, इत्यतः स्वप्रकाशत्वं तस्यानुभवसिद्धमित्याह अतश्चास्येति

( ११ ) संवित्प्रकाश एव सर्वजीवितभूतो मायीयव्यवहारे प्रमाणं कल्पयति इत्यतः पूर्वसिद्धत्वात् तत्र प्रमाणं किमपि नोपयुज्यते इत्याह किं चेति । परप्रकाशापेक्षयान्यत्सर्वं जडतया स्वात्मानमपि भासयितुमशक्तं कथं परं व्यवस्थापयितुमुद्यच्छेदिति यावत् ।

( १२ ) कश्च उपयोग इति, प्रमाणं नाम अभिनवाभासरूपं प्रमातरि प्रमितिलक्षणां विश्रान्तिं विदधत् प्रमाणं भवति, प्रमाता च नित्यावभासितत्वादविच्छिन्नाभासः सर्वाः प्रमितीः स्वात्मनि अन्तर्मुखरूपे भजते, तत् तस्मिन् कथमभिनव आभास उपयुज्यताम् तत्प्रमितिश्च कुत्रान्यत्र विश्राम्यतु, तस्मात् देहप्राणनीलसुखादिवेद्य एव प्रमाणोपयोगः न तु प्रमाणजीवितभूते परमेश्वरे । तदुक्तम्

'प्रमाणान्यपि वस्तूनां जीवितं यानि तन्वते ।
तेषामपि परो जीवः स एव परमेश्वरः ॥ '

इति ।

( १३ ) शब्दराशिमयेति, शब्दराशिः —अकारादि-हकारान्तो वर्णस-

न्तापरामर्शसारत्वात् परमशिव एव षट्त्रिंशत्तत्त्वात्मकः प्रपञ्चः । षट्त्रिंशत्तत्त्वानि च, – १ शिव २ शक्ति ३ सदाशिव ४ ईश्वर ५ शुद्धविद्या ६ माया ७ कला ८ विद्या ९ राग १० काल ११ नियति १२ पुरुष १३ प्रकृति १४ बुद्धि १५ अहंकार १६ मनः १७ श्रोत्र १८ त्वक् १९ चक्षुः २० जिह्वा २१ घ्राण २२ वाक् २३ पाणि २४ पाद २५ पायु २६ उपस्थ २७ शब्द २८ स्पर्श २९ रूप ३० रस ३१ गन्ध ३२ आकाश ३३ वायु ३४ वह्नि ३५ सलिल ३६ भूमयः, इत्येतानि ।

अथैषां लक्षणानि । तत्र शिवतत्त्वं नाम इच्छा-ज्ञान-क्रियात्मककेवलपूर्णानन्दस्वभावरूपः परमशिव एव । अस्य जगत् स्रष्टुमिच्छां परिगृहीतवतः परमेश्वरस्य प्रथमस्पन्द ए-

---

मूहो गर्भीकृतसमस्तविश्वस्तन्मयो योऽनन्यमुखप्रेक्षित्वस्वातन्त्र्यविश्रान्तिरूपः 'अहमेव प्रकाशात्मा प्रकाशे' इत्येवं-रूपः पूर्णाहन्तापरामर्शः स एव सारम् अतुच्छं रूपं यस्य तस्य भावस्तस्माद्धेतोरित्यर्थः ।

(१४) षट्त्रिंशत्तत्त्वानि, तस्य भावस्तत्त्वम् इति भिन्नानां वर्गाणां वर्गीकरणनिमित्तं यदेकमविभक्तं भाति तत्तत्त्वम्, यथा गिरिवृक्षपुरप्रभृतीनां नदीसरःसागरादीनां च पृथिवीरूपत्वमप्रूपत्वं चेति

(१५) सर्वप्रमातॄणामन्तः परिस्फुरत्पूर्णाहन्ताचमत्कारमयं सर्वतत्त्वोत्तीर्णं सकलतत्त्वराशिगतसृष्टिसंहारशतसहस्रप्रतिबिम्बनसहिष्णु महाप्रकाशवपुः शिवतत्त्वम् ।

ेच्छाशक्तितत्त्वम्[16], अप्रतिहतेच्छत्वात्, सदेवाङ्कुरायमाणमिदं जगत् स्वात्मनाहन्तयाच्छाद्य स्थितं रूपं सदाशिवतत्त्वम्[17], अङ्कुरितं जगदहन्तयावृत्य स्थितमीश्वरतत्त्वम्[18], अहन्तेदन्तयोरैक्यप्रतिपत्तिः शुद्धविद्या[19], स्वस्वरूपेषु भावेषु भेदप्रथा मायां[20], यदा तु परमेश्वरः पारमेश्वर्या मायाशक्त्या[21] स्वरूपं

(१६) तस्यैव स्वस्वातन्त्र्यमाहात्म्यात् बहिरुल्लिलसिषया परानन्दचमत्कारोद्रेकात् अहमिति परामर्शः शक्तितत्त्वम्।

(१७) यदा परमेश्वरः शुद्धचिन्मात्राधिकरण एवाहमित्यंशे इदमंशमुल्लासयति तदा तस्य प्रोन्मीलितमात्रचित्रकल्पभावराशिविषयत्वेन अस्फुटत्वात् इच्छाप्रधानं सदाशिवतत्त्वम्।

(१८) स्फुटीभूते च इदमंशे यदाहमंशं निषिञ्चति तदा ज्ञानशक्तिप्रधानमीश्वरतत्त्वम्। अनयोः प्रोक्तयोस्तत्त्वयोरहंविमर्शस्याविशेषेऽपि इदमंशस्य ध्यामलत्वाध्यामलत्वाभ्यां विशेषः।

(१९) यदा पुनः प्ररूढभेदभावराशिगतेदमंशस्फुरणे चिन्मात्रगतत्वेनाहमंशः समुल्लसति भेदाद्वैतवादिनामिव ईश्वरस्य यः समधृततुलापुटन्यायेनाहमिदमिति परामर्शः तत् क्रियाशक्तिप्रधानं विद्यातत्त्वम्।

(२०) मायेति, दुष्करतमवस्तुसंपा इति दनाप्रतीघातरूपा अचिद्रूपे शून्यादौ च प्रमातृताभिमानं प्ररूढं कुर्वती चिदेकमयानपि भावान् भेदेन आभासयन्ती स्वरूपं तिरोदधती कलादिक्षित्यन्तानां भावानामुपादानकारणं च माया।

(२१) मायाशक्त्येति, स्वातन्त्र्यापरपर्यायया।

पं० ६ क० पु० संकुचितग्राह्यग्राहकतामिति पाठः।

गृहयित्वा संकुचितग्राहकतामश्नुते तदा पुरुषसंज्ञः, अयमेव मायामोहितः कर्मबन्धनः[22] संसारी[23], परमेश्वरादभिन्नोऽपि अस्य मोहः परमेश्वरस्य न भवेत्–इन्द्रजालमिव ऐन्द्रजालिकस्य स्वेच्छया संपादितभ्रान्तेः, विद्याभिज्ञापितैश्वर्यस्तु[24] चिद्घनो मुक्तः[25] परमशिव एव। अस्य सर्वकर्तृत्वं सर्वज्ञत्वं पूर्णत्वं नित्यत्वं व्यापकत्वं च, शक्तयोऽसंकुचिता अपि संकोचग्रहणेन कला-विद्या-राग-काल-नियतिरूपतया[26] भवन्ति। अत्र कला[27]-

---

(२२) कर्मबन्धन इति, कर्माणि स्वात्मनो बन्धकानि अभिमन्यमानः।

(२३) संसारीति, संसरति इत्यतः संसारी, देहोऽपि स्वरूपसादृश्यं बाल्ययौवनादिषु अनुवर्तयन् संसरतीव, बुद्ध्यादेस्तु जन्मान्तरेऽपि संसरणम्।

(२४) विद्याभिज्ञापितैश्वर्यस्तु इति, विद्यया स्वरूपप्रकाशनशक्त्या अभिज्ञापदं प्रापितमैश्वर्यं यस्य, अत एव चिद्घनः शरीराद्यपि विश्वमचिद्रूपव्यामिश्रणशून्यं संवेदनमेव अभिमन्यमान इत्यर्थः।

(२५) मुक्त इति, पुनर्जन्मबन्धविरहात् देहे स्थितेऽपि मुक्त इति व्यपदेशयोग्य इति भावः। पतिते तु परमशिवस्वरूप एवेति।

(२६) नियतिरूपतया भवन्तीति, यथा राज्ञापहृतसर्वस्वस्य अनुकम्पया जीवनार्थं किंचित् स्तोकं धनं दीयते तथैव अणुत्वमापन्नस्य बोधस्य अपहृतसर्वज्ञत्वादेस्तत्स्थाने किंचित्कर्तृतादिपरमार्थं कलादिकं वितीर्यते इति भावः।

(२७) कलेति, यया सर्वं कर्तुमसमर्थः किंचिदेव घटादिकं करोतीति।

नाम अस्य पुरुषस्य किंचित्कर्तृताहेतुः, विद्या[२८] किंचिज्ज्ञत्वकारणम्, रागो[२९] विषयेष्वभिष्वङ्गः, कालो हि भावानां भासनाभासनात्मकानां क्रमो[३०]ऽवच्छेदको भूतादिः, नियतिः[३१] ममेदं कर्तव्यं नेदं कर्तव्यम् इति नियमनहेतुः, एतत् पञ्चकम् अस्य स्वरूपावरकत्वात् कञ्चुकमिति[३२] उच्यते, महदादि-पृथिव्यन्तानां तत्त्वानां मूलकारणं प्रकृतिः, एषा च सत्त्वरजस्तमसां[३३] सा-

---

(२८) विद्येति, यया किंचिदेव पुरोवर्ति घटादिकं जानाति न पुनर्दूरव्यवहितं वस्तु इति ।

(२९) राग इति, अपूर्णमन्यतया इदं मम उपयुज्यते, भूयासं, मा कदाचित् न भूवम् इत्येवंरूपः ।

(३०) क्रमोऽवच्छेदक इति, आज्ञासिषं जानामि ज्ञास्यामि इति, अकार्षं करोमि करिष्यामि इति ज्ञानक्रियास्वरूपेण भावानपि तथा कलयन् अवच्छिनत्ति इति ।

(३१) नियतिरिति, ममेदं कर्तव्यमिति, इदं स्वर्गादिफलकमश्वमेधादिकमेव मया कर्तव्यं न निरयादिफलकं ब्रह्महननादि इति । अथ च नियतादेव कारणान्नियतमेव कार्यमित्यादि बहुविधं नियतिरूपम् ।

(३२) कञ्चुकमिति, स्वरूपाद्व्यतिरिक्तमपि अव्यतिरिक्ततया पूर्णसंवित्स्वरूपमाच्छाद्य स्थितमित्यर्थः ।

(३३) सत्त्वरजस्तमसां सुखदुःखमोहात्मकानां प्रकाशक्रियानियमनस्वभावानां साम्यावस्था सामान्यं रूपं, यत्रैषामङ्गाङ्गिभावो नोपलभ्यत इत्यर्थः ।

म्यावस्था अविभक्तरूपा, निश्चयकारिणी[३४] विकल्पप्रतिबिम्ब[३५]-धारिणी बुद्धिः, अहंकारो नाम – ममेदं न ममेदमित्यभिमान-साधनम्, मनः संकल्पसाधनम्, एतत्त्रयमन्तःकरणम्[३६]। शब्द-स्पर्श-रूप-रस-गन्धात्मकानां विषयाणां क्रमेण ग्रहणसाधनानि श्रोत्र-त्वक्-चक्षुर्जिह्वा-घ्राणानि पञ्च ज्ञानेन्द्रियाणि। वचना-दान-विहरण-विसर्गानन्दात्मक्रियासाधनानि परिपाट्या वाक्-पाणि-पाद-पायूपस्थानि पञ्च कर्मेन्द्रियाणि। शब्द-स्पर्श-रूप-रस-गन्धाः सामान्याकाराः पञ्च तन्मात्राणि[३७]। आकाशम-वकाशप्रदम्, वायुः संजीवनम्, अग्निर्दाहकः पाचकश्च, सलिलमाप्यायकं द्रवरूपं च, भूमिर्धारिका,

---

(३४) निश्चयकारिणीति, इदमेतादृक् इत्येवंरूपो निश्चयः।

(३५) सत्त्वप्रधानत्वेन स्वच्छतया प्रतिबिम्बग्रहयोग्यत्वात् विकल्प-प्रतिबिम्बधारिणीति भावः।

(३६) अन्तर्वेद्यस्य सुखादेर्ग्रहणसाधनत्वात् अन्तःकरणम्। अङ्गाङ्गिभावेन गुणानां कार्यं, वक्ष्यमाणस्य भूतेन्द्रियादेः कार्यवर्गस्य च कारणम्।

(३७) तन्मात्राणीति, तदेव नाधिकं तत्र अन्यदस्तीति तन्मात्र-शब्देनावान्तरविशेषरहिता शब्दाद्या उच्यन्ते।

'यथा न्यग्रोधबीजस्थः शक्तिरूपो महाद्रुमः ।
तथा हृदयबीजस्थं विश्वमेतच्चराचरम् ॥'

इत्याम्नायनीत्या पराभट्टारिकारूपे हृदयबीजेऽन्तर्भूतमेतज्जगत् । कथं ? – यथा घटशरावादीनां मृद्विकाराणां पारमार्थिकं रूपं मृदेव, यथा वा जलादिद्रवजातीनां विचार्यमाणं व्यवस्थितं रूपं जलादिसामान्यमेव भवति, तथा पृथिव्यादिमायान्तानां तत्त्वानां सतत्त्वं मीमांस्यमानं सदित्येव भवेत्, अस्यापि पदस्य निरूप्यमाणं धात्वर्थव्यञ्जकं प्रत्ययांशं विसृज्य प्रकृतिमात्ररूपः सकार एवावशिष्यते, तदन्तर्गतमेकत्रिंशत्तत्त्वम्, ततः परं शुद्धविद्येश्वर-सदाशिवतत्त्वानि ज्ञान-क्रियासाराणि शक्तिविशेषत्वात् औकारेऽभ्युपगमरूपेऽनुत्तरशक्तिमयेऽन्तर्भूतानि । अतः परमूर्ध्वाधः सृष्टिरूपो विसर्जनीयः, एवं-भूतस्य हृदयबीजस्य महामन्त्रात्मको विश्वमयो विश्वोत्तीर्णः परमशिव एवोदयविश्रान्तिस्थानत्वान्निज-

---

(३८) यथेति, यथा वटबीजे तत्समुचितेनैव वपुषा अङ्कुरपत्रफलानि तिष्ठन्ति एवं नानाविधतनुकरणादिवैचित्र्यशालि विश्वमिदं हृदयबीजान्तःस्थितं । मयूराण्डरसे सर्वशिख्यवयवानुप्रविष्टबर्होपबर्हादिपूर्णरेखादिवैचित्र्यशिल्पकल्पनाकौशलवत् अवधानघनैः सूक्ष्मेक्षिकयावधार्यम् ।

(३९) विश्वमयो विश्वोत्तीर्ण इति, सर्वाकारत्वं निराकारत्वं चात्र क्रमेण हेतुः ।

स्वभावः। ईदृशं हृदयबीजं तत्त्वतो यो वेद समाविशति च स परमार्थतो दीक्षितः प्राणान् धारयन् लौकिकवद्वर्तमानो जीवन्मुक्त एव भवति, देहपाते परमशिवभट्टारक एव भवति ॥

---

(४०) दीक्षित इति, तिलाज्याहुतिवर्जितमेतत्परिज्ञानमेव तत्त्वतो दीक्षा इति भावः।

---

इति श्रीमन्महामाहेश्वराचार्यवर्यक्षेमराजविरचिता
पराप्रावेशिका समाप्ता ॥

सद्विद्यानां संश्रये ग्रन्थविद्वद्-
व्यूहे ह्रासं कालवृत्त्योपयाते ।
तत्तत्सद्धर्मोद्दिधीर्षैकतान-
सत्प्रक्षौजःशालिना कर्मवृत्त्यै ॥ १ ॥

श्रीमत्कश्मीराधिराजेन मुख्यै-
र्धर्मोद्युक्तैर्मन्त्रिभिः स्वैर्विवेच्य ।
प्रत्यष्ठापि ज्ञानविज्ञानगर्भ-
ग्रन्थोद्धृत्यै मुख्यकार्यालयो यः ॥ २ ॥

तत्राजीवं निर्विशद्भिर्मुकुन्द-
रामाध्यक्षत्वाश्रितैः सद्भिरेषः ।
पूर्त्या शुद्ध्या व्याख्यया संस्कृतः स्तात्
पूर्णो ग्रन्थः श्रेयसे सज्जनानाम् ॥ ३ ॥

( तिलकम् )

---

श्रीस्वात्मशिवार्पणं शिवदं च बोभवीतु अध्येतृश्रोतृविमष्टॄणाम् ॥

---

काव्यमाला १३.

साम्बकविप्रणीता ।

# साम्बपञ्चाशिका ।

क्षेमराजकृतया टीकया समेता ।

मूल्यं ४ आणकाः ।

KÂVYAMÂLÂ. 13.

# THE SÂMBAPANCHÂSIKÂ

OF

# SÂMBA.

WITH

The commentary of Kshemarâja.

EDITED BY

PAṆḌIT KEDÂRNÂTHA

AND

WÂSUDEVA LAXMAṆ SHÂSTRÎ PAṆASHÎKAR.

Second Edition.

PUBLISHED BY

TUKÂRÂM JÂVAJÎ,

PROPRIETOR "NIRṆAYA-SÂGAR" PRESS.

BOMBAY.

PRINTED BY B. R. GHÂNEKAR AT THE "NIRṆAYA-SÂGAR" PRESS,
FOR THE PUBLISHER.

1910.

*Price 4 Annas.*

# काव्यमाला।

## श्रीसाम्बप्रणीता

## [1]साम्बपञ्चाशिका।

[2]राजानकश्रीक्षेमराजकृतया टीकया समेता।

पुष्णन्देवानमृतविसरैरिन्दुमास्राव्य सम्य-
ग्भाभिः स्वाभी रसयति रसं यः परं नित्यमेव।
क्षीणं क्षीणं पुनरपि च तं पूरयत्येवमीदृ-
ग्दोलालीलोल्लसितहृदयं नौमि चिद्भानुमेकम्॥
एतदावेशवैवश्यप्रोन्मिषद्धिषणा वयम्।
विमृशामो मनाक्छ्रीमत्साम्बपञ्चाशिकास्तुतिम्॥

---

१. इयं सूर्यस्तुतिर्भगवतो वासुदेवस्य पुत्रेण वृष्णिवंशभूषणेन श्रीसाम्बेन प्रणीतेति टीकाकारः प्रारम्भे समाप्तौ च वदति. वाराहपुराणे चैकसप्तत्युत्तरशततमेऽध्याये—'ततः साम्बो महाबाहुः कृष्णाज्ञप्तो ययौ पुरीम्। मथुरां मुक्तिफलदां रवेराराधनोत्सुकः॥'—'साम्ब पञ्चाशकैः श्लोकैर्वेदगुह्यपदाक्षरैः। यत्स्तुतोऽहं त्वया वीर तेन तुष्टोऽस्मि ते सदा॥' इत्यादिश्लोकैः साम्बस्य पञ्चाशच्छ्लोकात्मकरविस्तुतिनिर्माणं प्रतीयते. स्तुतिस्तु तत्र नास्ति. सा च कदाचिदियमेव स्यात्. २. अयं टीकाकारो राजानकक्षेमराजस्तु कश्मीरेषु खिस्ताब्दीयैकादशशतकप्रारम्भ आसीत्, यतोऽयमात्मानं श्रीमदाचार्याभिनवगुप्तशिष्यत्वेन वर्णयति. ग्रन्थाश्चैतत्कृता एते ज्ञायन्ते—(१) परमार्थसंग्रहवृत्तिः, (२) प्रत्यभिज्ञाहृदयम्, (३) भैरवानुकरणस्तोत्रम्, (४) साम्बपञ्चाशिकाटीका, (५) स्तवचिन्तामणिवृत्तिः, (६) स्पन्दनिर्णयः(?), (७) स्पन्दसंदोहः(?), (८) स्वच्छन्दोद्द्योतः. इयं साम्बपञ्चाशिकाटीका प्रत्यभिज्ञाशास्त्रानुसारिणी वर्तते. तत्र प्रमापकत्वेन धृता एते—(१) आम्नायः, (२) कालिकाक्रमः, (३) कालोत्तरम्, (४) नन्दिशिखा, (५) भर्गशिखा, (६) भैरवानुकरणस्तोत्रम्, (७) विज्ञानभैरवः, (८) शिवसूत्रम्, (९) श्रीपूर्वः, (१०) श्रुतिः, (११) स्वच्छन्दः. एतन्मुद्रणमभिलषद्भिरस्माभिः पुस्तकद्वयमस्या उपलब्धम्. तत्र प्रथमं सटीकं शुद्धमेकोनविंशतिपत्रात्मकं केरलीयसभाशैवशास्त्रिभिः काश्मीरेभ्यः समानीतं क-संज्ञकम्, अपरं च जयपुरराजगुरुभट्टलक्ष्मीदत्तसूनुभट्टश्रीदत्तशर्मणां संग्रहात्प्राप्तं मूलमात्रं शुद्धं षट्पत्रात्मकं ख-संज्ञकं ज्ञेयम्. एतदाश्रयेणैतन्मुद्रणं संपन्नमिति शिवम्.

सोऽयं परामृतरसो रसज्ञैरिह रस्यताम् ।
आयुष्याज्यामृतस्पर्शः शतपद्या हि शान्तये ॥

समस्तागममहाम्नायरहस्यविन्महायोगी(गि)सहस्रसंप्रदायसंपूर्णः श्रीवासुदेवस्य भगवतः पुत्रः श्रीसाम्बः स्वात्मविवस्वत्स्तुतिं जगतोऽनुग्रहाय वक्तुमुपक्रमते—

शब्दार्थत्वविवर्तमानपरमज्योतीरुचो गोपते-
रुद्गीथोऽभ्युदितः पुरोऽरुणतया यस्य त्रयीमण्डलम् ।
भास्वद्वर्णपदक्रमेरिततमः सप्तस्वराश्वैर्वियद्-
विद्यास्यन्दनमुन्नयन्निव नमस्तस्मै परब्रह्मणे ॥ १ ॥

तस्मै परस्मै सर्वोत्कृष्टाय विश्वपूरणादिकर्त्रे च । अत एव चाभावशान्तब्रह्मचित्रब्रह्मादिसर्वब्रह्मकोडीकर्त्रे ब्रह्मणे बृहते व्यापकाय बृंहणाय च विश्वकर्त्रे चिदात्मने नमः । देहादिप्रमातृताप्रशमनेन तदेवाविशामीत्यर्थः । यस्य ब्रह्मणः संबन्धि ऊर्ध्वमशेषविश्वाभेदात्मतया उत्कृष्टतया गीयते विमृश्यत इत्युद्गीथः प्रथमोन्मेषात्मशब्दब्रह्मरूपः प्रणवो ध्वनिः । देवतास्तुतिकर्मप्रधानसामर्ग्यजुर्वेदाख्या त्र्य्येव शाखा प्रपञ्चकोडीकृतसमस्ताम्नायवाक्यैकवाक्यताव्याप्त्या मण्डलम् । अतश्चैतत्सर्वासां विद्यानां मन्त्रशास्त्रविज्ञानानां स्यन्दनमास्पदं प्रसवकारणं च कर्मभूतं च वियत्पराकाशमुन्नयन्नुल्लासयंस्तन्मयत्वमापादयन्निव पुरः प्रथममरुणतयातिदीप्तत्वेनोदितः स्वयमुन्मिषितः । वियन्मयस्याप्यस्य दीप्तस्योन्मेषावष्टम्भपुरःसरं तथा स्फुरणादुन्नयन्निवेत्युक्तम् । एतच्च त्रयीमण्डलं भास्वद्भिः प्रोद्गीथारुणिम्ना स्फुरितैर्वर्णपदक्रमैरक्षरवाचकतदानुपूर्वीभिरीरितं ध्वस्तं तमोऽज्ञानं येन तादृक् । उच्चारणपदार्थवाक्यार्थप्रतिपत्तिषु परमचिदभेदविश्रान्तिदमित्यर्थः । केन वियदुन्नयन् । सप्त ये स्वराः स्वयं राजमाना विश्वाक्षेपिणो वर्णाः पश्यन्त्यादिप्रवर्तनप्राणितकल्पाः षड्जादिध्वनिविमर्शास्त एव सर्वत्राशुसंचारित्वादश्वास्तैः । यस्य ब्रह्मणः कीदृशस्य । गोपतेः परादिवाक्प्रभोर्मरीचिचक्रेश्वरस्य च । अत एव शब्दार्थत्वेन नानालौकिकेतरशब्दतदर्थतत्संबन्धैर्विचित्रतया वर्तमानं स्वातन्त्र्यादेतद्वैचित्र्याभासात्म यत्परं ज्योतिः शाक्तं वीर्यं तेन च रुग्दीप्तिर्यस्य । बाह्यस्यापि सूर्यस्य 'ज्ञानशक्तिः परा ह्येषा तपत्यादित्यविग्रहा' इत्याम्नायनीत्या परब्रह्मप्रतिबिम्बकल्पस्य प्रणवव्याप्तिकोऽरुणः पूर्वमुदितः । त्रयीव्याप्तिकं मण्डलमितरविद्याव्याप्तिकं स्यन्दनं च कर्म भास्वद्वर्णैः पदक्रमैर्देदीप्यमानचरणविन्यासैरीरिततमसो ये सप्तस्वरव्याप्तिका अश्वास्तैर्वियदुत्क्षिपति । अथ च विचित्रवाच्यवाचकात्मजगद्वृत्तेश्चिच्चक्रेश्वरस्योद्गीथः शक्त्यङ्कुरोन्मेषो दीप्तो ब्रह्मविष्णुरुद्रजाग्रत्स्वप्नसुषुप्तिब्रह्ममूलमायाण्डादित्रयीमण्डलम् विश्वव्यापकम् । वेदनानादिधर्मस्य परमात्वबोधनेत्याद्याम्नायनिरुक्तोन्मनाशक्त्याख्या विद्यास्यन्दनं स्वरैर्विचित्रैर्मन्त्रैर्ध्वनिभिरुन्नयन्निव प्रथममुदितः । किं कृत्वा । भास्वतां

वर्णानामकारादिमात्राणां पदानां बिन्द्वादिविश्रान्तीनां क्रमेण परिपाट्या ईरितं तमः समन्तात् पाशजालं यत्र ॥

एवं सामान्यव्याप्त्या परमार्कं स्तुत्वा देहस्थमध्यनाडीव्याप्त्या स्तौति—

ओमित्यन्तर्नदति नियतं यः प्रतिप्राणि शब्दो
वाणी यस्मात्प्रसरति परा शब्दतन्मात्रगर्भा ।
प्राणापानौ वहति च समौ यो मिथो ग्राससक्तौ
देहस्थं तं सपदि परमादित्यमाद्यं प्रपद्ये ॥ २ ॥

तं परमादित्यं परब्रह्मस्वरूपमेव देहस्थितं मध्यनाडीगतप्राणब्रह्मनिविष्टं आद्यं विश्वचित्रभित्तिभूतं सपदि प्रपद्ये अभिसंध्यवधानेन समाविशामि । कं तमित्याह—य ओमितिशब्दः क्रोडीकृताशेषशब्दनात्मनादरूपो महाप्रणवः प्रतिप्राणि सर्वभूतेषु नियतमविच्छिन्नप्रवाहेणान्तर्नदति परा वागात्मस्वरूपं विमृशन्स्थितः । यस्माच्च शब्दतन्मात्रगर्भा आसूत्रितक्रमादि(कादि)क्षान्तशब्दसामान्यमात्राविभागज्योतिर्मयी परा द्वितीया वाणी पश्यन्ती प्रसरत्युन्मिषति । यश्च मिथो ग्राससक्तावन्योन्यकवलनपरौ समौ समानभूमिकारूढौ प्राणापानौ वहति । उदानवह्न्यात्मनिजमहाज्योतिर्मयौ करोति ॥

एवं महाव्याप्त्या सूक्ष्मव्याप्त्या चानवच्छिन्नं मध्यधामस्थं च चिदर्कं नुत्वा प्रपञ्चव्याप्त्यापि स्तौति—

यस्त्वक्चक्षुःश्रवणरसनाघ्राणपाण्यङ्घ्रिवाणी-
पायूपस्थस्थितिरपि मनोबुद्ध्यहंकारमूर्तिः ।
तिष्ठत्यन्तर्बहिरपि जगद्भासयन्द्वादशात्मा
मार्तण्डं तं सकलकरणाधारमेकं प्रपद्ये ॥ ३ ॥

मृतानां वेद्यैकरूपतया शवप्रायाणामण्डानां देहप्राणादिपिण्डानामयमनुप्राणको मार्तण्डश्चिद्भानुस्तमेकमद्वितीयमपि प्रपञ्चव्याप्त्या सकलानां प्रमातॄणां सकलानि करणानि च त्रयोदशकरणानि च तेषामाधारमनुप्राणकमविभिन्नमाश्रयं प्रपद्ये । यस्त्वगाद्यहंकारान्तस्वीकृतत्रयोदशेन्द्रियमूर्तिः । अतश्चान्तरहंकारात्मा वेदग्राहकरूपः बहिश्चाध्यवसायादिव्यापारबुद्ध्यादिकरणद्वादशात्मा ग्राह्यरूपं जगद्भासयंस्तिष्ठतीति स्थूलदृशार्थः । रहस्यदृशा तु—गृहीतसर्वेन्द्रियमूर्तिरपि यः सृष्ट्यादिमरीचिचक्रचित्रसंचारचातुर्याद्द्वादशात्मा एक एव चिदर्कोऽन्तर्बहिश्च जगत्कालानलादि व्योमकलान्तं विश्वं भासयंस्तुर्यधामात्मनिजभासा चक्रमयत्वमापादयन्सर्वकरणान्याधारतया निजौजोज्ज्वलनज्वलितान्याश्रित्य स्थितस्तं प्रकर्षेण प्रपद्ये । निजव्युत्थानं साक्षात्कुर्वन्स्थितोऽस्मीत्यर्थः ॥

---

१. 'प्रभवति' ख.

प्रपञ्चव्याप्त्याखिलेन्द्रियाधारे स्तुतेऽपि भगवति प्रकाशविमर्शपरमार्थे तद्विमर्शप्रसरसरणिं वाणीं स्तौति—

> या सा मित्रावरुणसदनादुच्चरन्ती त्रिषष्टिं
> वर्णा[2]नत्र प्रकटकरणैः प्राणसं[3]ज्ञात्प्रसूतान् ।
> तां पश्यन्तीं प्रथममुदितां मध्यमां बुद्धिसंस्थां
> वाचं वक्त्रे करणविशदां वैखरीं च प्रपद्ये ॥ ४ ॥

'अविभागात्तु पश्यन्ती सर्वतः संहृतक्रमा । स्वरूपज्योतिरेवान्तः सूक्ष्मा वागनपायिनी ॥' इत्यादिना लक्षितां प्रथममादावुदितामुन्मिषितां तां स्वरूपज्योतीरूपां पश्यन्त्याख्यां तदनु तामेव बुद्धिसंस्थां बुद्ध्यभ्यासं प्राप्ताम् । 'केवलं बुद्ध्युपादानात्क्रमरूपानुपातिनी । प्राणवृत्तिमतिक्रम्य मध्यमा वाक्प्रवर्तते ॥' इत्यादिलक्षिताम् । मध्ये भवत्वान्मध्यमां मध्येऽन्तःकरणे वर्तमानाम् । तदनु वक्त्रे वदने करणेषु जिह्वामूलजिह्वामध्यादिषु विशदां निर्मलाम् । 'स्थानेषु विवृते वायौ कृतवर्णपरिग्रहा । वैखरी वाक्प्रयोक्तॄणां प्राणवृत्तिनिबन्धना ॥' इत्यादिना लक्षिताम् । विखरे शरीरे भवत्वात्तदाख्यां वाचं प्रपन्नोऽस्मि । कां तामित्याह—या सा मित्रावरुणसदनादग्नीषोममयात्मनः परावाक्प्रधानान्मध्यधाम्नोऽकारादींस्त्रिषष्टिं वर्णानुच्चरन्ती आसूत्रितक्रमतया भेदाभेदाभ्यां भेदेन च विमृशन्ती । केनोच्चरन्ती । प्रकटैरन्तर्मुखीभावेनाभिन्नस्फुटप्रकाशैकमध्यमासैः करणैः सर्वेन्द्रियैः । कीदृशान्वर्णान् । प्राणसङ्घात्प्रसूतानुद्भूतान् । तत्र चिज्ज्योतिषि गुणीभूतसूक्ष्मप्राणसङ्घात्पश्यन्त्यां गुणीभूतचित्सूक्ष्मप्राणसङ्घान्मध्यमायां स्थूलप्राणसङ्घाद्वैखर्यां वर्णा जायन्ते । ते च त्रिषष्टिः । तद्यथा—अ-इ-उ-ऋ-वर्णाश्चत्वारो ह्रस्वदीर्घप्लुतभेदा द्वादश । ऌकारस्य दीर्घो नास्तीति ह्रस्वप्लुतभेदाद्द्विविधः । संध्यक्षराणां ह्रस्वा न सन्तीति दीर्घप्लुतभेदादष्टविधाः । एवं स्वरा द्वाविंशतिः । कादयो मान्ताः पञ्चविंशतिः स्पर्शाः । अन्तस्थाश्चत्वारः । ऊष्माणश्चत्वारः । कुं खुं गुं घुं इति यमाश्चत्वारः । अनुस्वारविसर्गजिह्वामूलीयोपध्मानीया अं अः ≍क ≍प इति चत्वारः । यथोक्तम्—'स्वरा द्वाविंशतिश्चैव स्पर्शानां पञ्चविंशतिः । यादयः शादयश्चाष्टौ चत्वारश्च यमाः स्मृताः ॥ अनुस्वारो विसर्गश्च ≍क ≍प इति पराश्रयौ । त एते गदिता वर्णास्त्रिषष्टिरिह सूरिभिः ॥' इति । मित्रः सूर्योऽन्तरशेषद्वैतशोषकारित्वादग्निः । वरुणो ह्लादाप्यायकारित्वात्सोमः । 'वर्णानन्तः प्रकटकरणैः प्राणसङ्घात्प्रसूते' इति पाठान्तरे या परा वाक्शक्तिर्मित्रावरुणसदनादुच्चरन्ती प्रमाणमेयात्मकसूर्यचन्द्राश्रयेणात्माकाशादूर्ध्वं सरन्ती सर्वोत्तीर्णं निजं धाम प्रमातृरूपं श्रवन्ती अस्ति सैवान्तःप्रकटैरन्तरेव स्फुटैरिन्द्रियैः कृत्वा त्रिषष्टिं वर्णान्प्राणसङ्घाद्धेतोः प्रसूते जनयतीत्यन्वयः । इन्द्रियाणां रूपाद्युपलब्ध्यानुमेयत्वा-

---

१. अयं श्लोको महाभारतटीकायां योगवासिष्ठटीकायां श्रीमद्भागवतटीकायां च तत्तट्टीकाकर्तृभिः प्रमाणतया समुद्धृतोऽस्ति. २. 'अन्तः' ख. ३. 'सङ्घप्रसूतान्' ख.

द्बहिःस्फुटत्वाभावेनान्तःप्रकटीभावः । एतदभिधेयपक्षे उच्चारणप्रसूत्योः क्रमेणानुवाद्यविधेयभावः ॥

एवं वाक्प्रसरान्तं भगवन्तं स्तुत्वा मध्यमधामसाफल्यमर्थयते—

ऊर्ध्वाधःस्थान्यतनुभुवनान्यन्तरा संनिविष्टा
नानानाडिप्रसवगहना सर्वभूतान्तरस्था ।
प्राणापानग्रसननिरतैः प्राप्यते ब्रह्मनाडी
सा नः श्वेता भवतु परमादित्यमूर्तिः प्रसन्ना ॥ ५ ॥

परमादित्यस्य चिद्भानोर्ब्रह्मनाडीरूपा या सेति दिव्या मूर्तिः समुच्छ्रिताकृतिर्नोऽस्माकं प्रसन्ना प्रशस्ता प्रशमितप्राणादिकालुष्या अत एव श्वेता चिदानन्दघनतया स्फुरन्ती अस्तु । कीदृशी सा । या ऊर्ध्वमधश्च स्थितानि अतनून्यनल्पानि अनाश्रितादिकालाग्न्यन्तभुवनेशनानाभुवनानि देहे बहिश्चान्तरा मध्ये संनिविष्टा व्याप्यावस्थिता । तथा नानानाडीनां चक्षुरादिरोमरन्ध्रान्तानां सुषिराणां प्रसवेन स्फारेण गहना सर्वैर्दुष्प्रापा । सर्वेषां स्थावरादिदेवयोनिभेदान्तानां भूतानामन्तरस्था देहमध्ये वर्तमाना । यतश्चोक्तयुक्त्या गहना अत एव कैश्चिदेव प्राणापानयोः सर्ववाहप्रसवप्रवेशयोर्ग्रसननिरतैर्भक्षणप्रगल्भैः प्राप्यते समाविश्यते ॥

किं च—

न ब्रह्माण्डव्यवहितपथा नातिशीतोष्णरूपा
नो वा नक्तंदिवगममितातापनीयापराहुः ।
वैकुण्ठीया तनुरिव रवे राजते मण्डलस्था
सा नः श्वेता भवतु परमादित्यमूर्तिः प्रसन्ना ॥ ६ ॥

ब्रह्मणो ब्रह्मबिलावरणनिविष्टस्याण्डं गर्भीकृतभूमूलमायाण्डप्रपञ्चशक्त्यण्डं तेन न व्यवहिता अपि तु समन्ततः क्रोडीकारी पन्थाः प्रसरमार्गो यस्याः तथा अतिशीतः सोमः अत्युष्णो वह्निः इयं तु द्वैतदाहादद्वैतानन्दस्यन्दित्वाच्च नैवंरूपा अपि तु समरसीभूताग्नीषोमात्मा । तथा नक्तंदिवं रात्रिंदिनं यो गमो भ्रमणं तेन नो इता प्रमेयभावं न प्राप्ता तद्वती । तथा अतापनीया परमाह्लादप्रदा । तथा अपगतो राहुराच्छादनप्रधानः शून्यप्रमाता यस्याः सा । किं च रवेश्चिद्भानोर्मण्डले रश्मिपरिवेषे राजते दीप्यते । बाह्यार्कमूर्तिस्तु ब्रह्माण्डव्यवहिता खर्लोकान्तमात्रावभासिका शिशिरग्रीष्मादावतिशीतोष्णरूपा अहर्निशं भ्रमन्ती संतापिका राहुभिभूता चेति व्यतिरेकध्वनिः । वैकुण्ठस्य विष्णोर्मूर्तिरिवेत्युपमा । सापि च बलिवञ्चनावसरे ब्रह्माण्डे ब्रह्माण्डान्तर्निरुद्धमार्गा न केनचित् । अत एव नातिशीतोष्णरूपा । प्रकाशाह्लाददा भक्तानामित्यर्थः ।

१. 'ऊर्ध्वाधःस्थादतनु' ख. २. 'अन्तरं' ख.

नक्तंदिवगमेनाहोरात्रपरिभ्रमणेन न मिता । देवादिभिर्नैयत्यतया परिच्छिन्नेत्यर्थः । तापनीया महाप्रतापवती । अपगतराहुरपक्रान्तरविमण्डला चेति श्लेषः । एवमयमत्रोपमाश्लेषो व्यतिरेकध्वनिना संसृष्टः ॥

अथ युगपदन्तर्बहिश्चार्कमूर्तिं स्तौति—

यत्रारूढं त्रिगुणवपुषि ब्रह्म तद्बिन्दुरूपं
योगीन्द्राणां यदपि परमं भाति निर्वाणमार्गः ।
त्रय्याधारः प्रणव इति यन्मण्डलं चण्डरश्मे-
रन्तःसूक्ष्मं बहिरपि बृहन्मुक्तयेऽहं प्रपन्नः ॥ ७ ॥

तच्चण्डरश्मेश्चिद्दीप्तांशोर्मण्डलं मुक्तये समावेशात्मजीवन्मुक्त्यर्थं प्रपन्नोऽस्मि । कीदृशम् । अन्तश्चिद्भुवि सूक्ष्ममाद्योन्मेषात्म । योगीन्द्रैरेव लभ्यम् । बहिरपि बृहन्महापरिमाणम् । यत्र सृष्टिस्थितिसंहारकारिरजःसत्त्वतमोनिविष्टब्रह्मविष्णुरुद्राभिधाप्यकारोकारमकाराख्यह्रस्वदीर्घप्लुतवर्णत्रयात्मत्रिगुणवपुषि प्रणवे विश्ववेद्याविभागवेदनात्मा बिन्दुरिति तदुपलक्षितोन्मनान्ताप्रमेयपरिपाटीरूपं यस्य तादृग्ब्रह्म बृहद्बृंहकं च शाक्तं तेज आरूढयत्युत्कृष्टतया व्यवस्थितम् । यच्च परममसामान्यम् । योगीन्द्राणां मितयोग्यतिशायिपरतत्त्वैकभाजां निर्वाणमार्गो जीवन्मुक्त्युपायो भाति स्वप्रकाशतया स्फुरति । त्रय्याः प्राङ्निर्णीताया आधार आश्रयः । प्रकर्षेण नूयते उत्कृष्टतया विमृश्यते परं पारमेश्वरं स्वरूपं येनेति कृत्वा प्रणव इत्येतन्नाम यत् । बाह्येऽप्यर्कमण्डले 'नवयोजनसाहस्रो विग्रहोऽर्कस्य मण्डलम् । त्रिगुणं' इति स्वच्छन्दादिष्टनीत्या यत्र बिन्दुरूपमिति सितवर्तुलाकारं ब्रह्ममयं तदसामान्यं बिम्बमारूढम् । तच्च योगिनां निर्वाणमार्गः । तेषां हि सूर्यमण्डलभेदनस्य श्रवणात् । तथा वक्ष्यमाणदृशा सामर्ग्यजुर्मयधाममण्डलाकृतित्वात्त्रय्याधारः । प्रकर्षेण नूयमानत्वात्प्रणवो विश्वशरीरत्वाच्च प्रणवः ॥

यस्मिन्सोमः सुरपितृनरैरन्वहं पीयमानः
क्षीणः क्षीणः प्रविशति यतो वर्धते चापि भूयः ।
यस्मिन्वेदा मधुनि सरघाकारवद्भान्ति चाग्रे
तच्चण्डांशोरमितममृतं मण्डलस्थं प्रपद्ये ॥ ८ ॥

चिद्भानोर्मण्डलस्थं मध्यधामनिविष्टं तत्परमानन्दरूपममितमनल्पममृतं प्रपद्ये समाश्रये । यत्रामृते सोमः सर्वो मेयवर्गः सुरादिभिः सर्वैः प्रमातृभिः प्रतिदिनं कलाग्रासयुक्त्या पीयमानत्वात्क्षीणः क्षीणः सन्पुनः पुनः प्रविशति हृद्विश्रान्त्यनन्तरं निमज्जति । यत एव मण्डलाद्भूयोऽपि वर्धतेऽभिव्यज्यते मेयरूपश्चन्द्रः । यस्मिंश्च वेदाः सर्वशास्त्राणि मधुनि माक्षिके सरघाणां मधुकरीणामाकार इवाग्रे भान्ति पुरः स्फुरन्ति । यथा सरघा

---

१. 'तत्प्रपद्ये' ख.

-नाक्षिकं संचित्य परिवृत्त्य सोल्लासमासते तथा सर्वे वेदा वाक्यैकवाक्यतया पराद्वयस-मृतमामृश्य भ्राजन्ते । बाह्योऽपि सोमः कृष्णपक्षेषु पितृदेवनरग्रस्तकलापञ्चदशको-ऽमावास्यायां सूर्यमण्डलं प्रविश्य वर्धते । वेदाश्चार्कज्योतिर्लग्ना आसते ॥

ऐन्द्रीमाशां पृथुकवपुषा पूरयित्वा क्रमेण
क्रान्ताः सप्त प्रकटहरिणा येन पादेन लोकाः ।
कृत्वा ध्वान्तं विगलितबलिव्यक्ति पाताललीनं
विश्वालोकः स जयति रविः सत्त्वमेवोर्ध्वरश्मिः ॥ ९ ॥

'यो हि यस्माद्गुणोत्कृष्टः स तस्मादूर्ध्वमिष्यते' इति स्थित्या ऊर्ध्वा विश्वोत्कृष्टा रश्मयो यस्य । अत एव सतां विद्यमानानामशेषाणां भावः सत्त्वं महाप्रकाशात्मरूपम् । तदेव तत्परमार्थः । ततश्च प्रकाशमानतया प्रकाशात्मन्येव विश्वस्य मग्नत्वात्प्रकाशो विश्वालोकः स एव रविश्चिद्भानुर्जयति सर्वोत्कर्षेण वर्तते । येनैन्द्रीमाशां प्राच्योन्मेषदशां पृथुकवपुषा योगिगम्यसूक्ष्मशाक्तस्पन्दात्मना पूरयित्वा उन्मिषितप्राणादिसंकोचचित्प्राश्चान्योच्छलितां कृत्वा 'शिवादिसकलात्मान्ताः शक्तिमन्तः प्रकीर्तिताः' इति श्रीपूर्वादिष्टनीत्या शिवमन्त्रमहेश्वरमन्त्रेश्वरमन्त्रविज्ञानाकलप्रलयाकलसकलाख्याः क्रमात्कर्मप्राणीयतुटिस्था निजशक्तिसहिताः सप्तलोकाः 'पादोऽस्य विश्वा भूतानि' इति स्थित्या पादेन निजांशमात्रेणाक्रान्ताः क्रोडीकृत्य स्वज्योतिर्मयीकृताः । कीदृशेन । प्रकटाः स्वात्माभासा रूपादिविश्वहरणाद्धरयश्चक्षुरादिशक्तयो यस्य । तदुक्तं श्रुतौ—'युक्ता ह्यस्य हरयः शता दश' इति । निःसंख्यशक्तिरात्मेति ह्यस्यार्थः । कथं क्रान्ताः । ध्वान्तमात्मन्यनात्मप्रतीत्यात्माज्ञानं विगलिता बलिरनात्मन्यात्माभिधायिनी व्यक्तिर्यस्य तादृक् पाताललीनं निःशेषप्रशमितं कृत्वा । बाह्येनाप्यर्केण सप्ताश्वारूढेनैन्द्रीं दिशं सूक्ष्मरूपेणापूर्य भूरादिलोकाः पादेन मरीचिभिर्ध्वान्तं ध्वंसयित्वा क्रमेण क्रान्ताः । प्रकटहरिणा च नारायणेन विगलिता बल्याख्यस्य दानवेन्द्रस्य व्यक्तिर्यत्र तद्धान्तं दानवकुलं पाताललीनं कृत्वा भूरादिलोकाश्चरणविन्यासक्रमेणाक्रान्ताः । किं कृत्वा । पृथुकवपुषा बालवामनशरीरेण इन्द्रादिदिग्गापूरणं कृत्वा । सोऽपि विश्वालोकः सत्त्वप्रधानश्चेत्यत्र श्लेषालंकारः । श्लेषोपमाध्वनिसंसृष्टिरियम् ॥

ध्यात्वा ब्रह्म प्रथममतनु प्राणमूले नदन्तं
दृष्ट्वा चान्तः प्रणवमुखरं व्याहृतीः सम्यगुक्त्वा ।
यत्तद्वेदे तदिति सवितुर्ब्रह्मणोक्तं वरेण्यं
तद्भर्गाख्यं किमपि परमं धामगर्भं प्रपद्ये ॥ १० ॥

ब्रह्मणा प्रजापतिना वेदेषु प्रणवमुखरमोंकारोच्चारणपूर्वं तदित्यादि गायत्र्याः सवितु-

१. 'मूलेन दत्तं' ख.

विश्वप्रसूतिहेतोश्चिदादित्यस्य यत्तत्किमपीत्यसामान्यं भर्ग इत्याख्या यस्य तत्परमं सर्वोत्कृष्टं धाम परस्फुरत्तात्म शाक्तं तेजो बाह्यसूर्यसोमवह्नयादिधामक्रोडीकारित्वाद्धामगर्भं वरेण्यमनुग्रहकारि उक्तं तत्प्रपद्ये समाविशामि । किं कृत्वा ब्रह्मणोक्तम्, किं कृत्वा च प्रपद्ये । प्रथममादावतनु अशरीरं श्रीभर्गशिखादिष्टनीत्या अकारपरामर्शात्म वीरेश्वराख्यं च ब्रह्म बृहद्बृंहकं च परं शाक्तं धाम प्राणमूले अप्राणाद्यस्फुरत्ताधाम्नि ध्यात्वा विचिन्त्यानन्तरं नदन्तमिति नादाख्यं परविमर्शात्मानमन्तरित्युक्तशाक्तरूपप्राणितकल्पतया स्थितं दृष्ट्वा स्वात्मतया साक्षात्कृत्य तन्नादविमर्शानुप्रवेशावष्टम्भबलोन्मिषत्प्रणवोच्चारणपूर्वम् । तथा 'भूः स्वाहा' 'भुवः स्वाहाः' 'स्वः स्वाहा' 'भूर्भुवःस्वःस्वाहा' इति च मन्त्ररूपा समग्रमेयमानप्रमातृणां ससंस्काराणां परब्रह्ममयत्वामर्शिनीर्व्याहृतीश्चतस्रः सम्यगित्यन्तरामर्शावष्टम्भाशैथिल्येनोक्त्वा उच्चार्य । अथ च 'सर्वव्यवहारानेकरूपाः कथा जपः' इति शिवसूत्रादिष्टनीत्या तदभेदामर्शप्रधानतया परशाक्तरसप्लावितान्संपाद्य । शाक्तधामैकाम्यवशासादितशांभवधामावष्टम्भबलेन व्युत्थानदशामपि तदभेदरसप्रोक्षितां विधायेत्यर्थः । धामगर्भमित्यत्र धामशब्दस्तन्त्रेण द्विरुक्तः । तथा प्रणवमुखरमिति ॥

त्वां स्तोष्यामि स्तुतिभिरिति मे यस्तु भेदग्रहोऽयं
सैवाविद्या तदपि सुतरां तद्विनाशाय युक्तः ।
स्तौम्येवाहं त्रिविधमुदितं स्थूलसूक्ष्मं परं वा
विद्योपायः पर इति बुधैर्गीयते खल्वविद्या ॥ ११ ॥

हे भगवन्, त्वां स्तुतिभिः स्तोष्यामीति स्तोतृस्तुत्यस्तुतिकल्पनात्मा यो मे भेदग्रह एषैव चिदद्वयाप्रथनात्माविद्या तथापि तस्या अविद्यायाः सुतरामतिशयेन विनाशाय निःशेषोन्मूलनाय युक्तो नित्यसंबद्धस्त्वां स्तौम्येव देहाप्रमातृतानिमज्जनेन सर्वोत्कृष्टतया सततं परामृशामि न तु क्षणमप्युदासीन आसे । त्वामेव चिदर्कं स्तौमि न तु परिमितां कांचन देवताम् । कीदृशं त्वाम् । स्थूलं बाह्यप्राणार्करूपम् । सूक्ष्मं मध्यनाडीगतं प्राणब्रह्मरूपम् । परं चानवच्छिन्नं विश्वात्मचिदानन्दघनम् । तदिति प्राक्तनवाक्यव्यावर्णितमेकमेव । नित्योदितं च । वाशब्दश्चार्थे । युक्तं चैतत् । यतो बुधैस्तत्त्वज्ञैरविद्यैव विद्योपायः पर इत्युक्तः । स्तोतृस्तुत्यादिविभागकल्पनात्माविद्यया समस्ताविद्याबीजदेहादिप्रमातृत्वाभिमानप्रशमनेन चिदानन्दघनपरमात्मोत्कर्षपरामर्शात्मा स्तुतिः परमसमावेशप्रदेत्यर्थः ॥

स्तौम्येवेत्युक्तिं प्रपञ्चयति—

योऽनाद्यन्तोऽप्यतनुरगुणोऽणोरणीयान्महीया-
न्विश्वाकारः सगुण इति वा कल्पनाकल्पिताङ्गः ।

१. 'तद्व्युदासाय' ख. २. 'वेद्योपायः' ख.

नानाभूतप्रकृतिविकृतीर्दर्शयन्भाति यो वा
तस्मै तस्मै भवतु परमादित्य नित्यं नमस्ते ॥ १२ ॥

हे परमादित्य चिदर्क, तस्मै तस्मै इति परसूक्ष्मस्थूलरूपाय विश्वात्मने तुभ्यं नित्यं नमः । सर्वकालं देहादिप्रह्वतया परामृशंस्त्वामेव समाविशामीत्यर्थः । कीदृशाय. तस्मै योऽनाद्यन्तो देशकालाद्यनवच्छिन्नः । अतनुराकारानियन्त्रितः । अतश्च सार्वज्ञादिगुणास्पृष्टः । अणोरत्यन्तसूक्ष्मरूपतया योगिदृश्यात्परमाणोरप्यणीयानतिसूक्ष्मः न कस्यापि वेद्यः । अपि तु स्वप्रकाशचिदेकरूपः । न तु देशतः संकुचितः । परमाणोः सूक्ष्मस्य वेद्यत्वाद्दृश्यत्वाच्च । महीयान्व्यापकः । अतश्च विश्वक्रोडीकारित्वाद्विश्वाकारः । सार्वज्ञादिगुणयोगात्सगुणः । इत्येवंप्रकारया कल्पनया कल्पितानि पृथक्पृथगुल्लिखितान्यङ्गानि तत्तद्धर्मरूपा अवयवभागा यस्य तादृग्वेत्यनयोक्त्यावच्छिन्नवस्तुविषयशब्दविकल्पासंस्पृष्टं परमेकं स्वरूपमनवच्छिन्नमिति ध्वनयति । नानाभूतानि विचित्राः स्थावरादिब्रह्माण्डान्ताः प्राणिनस्तेषां प्रकृतीर्मायाप्रकृतिशुक्रशोणितादिकारणानि, विकृतीः कलाबुद्धिदेहादिकान्दर्शयन्य आभाति । संकुचितसर्वाभासोल्लासकतया वा यः स्फुरतीत्यर्थः ॥

तत्त्वाख्याने त्वयि मुनिजना नेति नेति ब्रुवन्तः
श्रान्ताः सम्यक्त्वमिति न च तैरीदृशो वेति चोक्तः ।
तस्मात्तुभ्यं नम इति वचोमात्रमेवास्मि वच्मि
प्रायो यस्मात्प्रसरतितरां भारती ज्ञानगर्भा ॥ १३ ॥

यस्मात्त्वत्तो भारती पश्यन्त्यादिवाक् ज्ञानगर्भा स्वावभाससंवित्प्रधाना प्रसरति तस्मै तुभ्यं नम इति वचोमात्रमेव, न त्वतिरिक्तं स्तुतिवाक्यादि वच्मि । ज्ञानस्य सर्ववाक्प्रसरहेतोः अनवच्छिन्नस्य विभिन्नस्तुतिवाग्भिः स्तोतुमशक्यत्वात् । नमःशब्देन तु देहादिप्रह्वतां तुरीयकस्वचित्प्रकर्षपरामर्शनस्य कर्तुं शक्यत्वात् । युक्तं चैतत् । यस्मान्मुनयोऽपि त्वयि त्वद्विषये तत्त्वाख्याने अणुर्न महान् न ह्रस्वं दीर्घं नेत्यादि ब्रुवन्तः श्रान्ताः क्लिष्टाः । न च तैस्त्वमित्येवंविधोऽसीति एतादृशो वेति एतत्तुल्यो वेति सम्यगुक्तः । वागगोचरत्वादेवेत्यर्थः ॥

सर्वाङ्गीणः सकलवपुषामन्तरे योऽन्तरात्मा
तिष्ठन्काष्ठे दहन इव नो दृश्यसे युक्तिशून्यैः ।
यैश्च प्राणारणिषु नियतैर्मथ्यमानासु सद्भि-
र्दृश्यं ज्योतिर्भवसि परमादित्य तस्मै नमस्ते ॥ १४ ॥

---

१. 'विकृतिः' ख. २. 'तुभ्यं' ख. ३. 'अभिवच्मि' ख. ४. 'यच्च' ख. ५. 'तुभ्यं' ख.

